॥ श्रीहनुमत्स्तवः ॥

कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ।
उद्यदादित्यसङ्काशमुदारभुजविक्रमम् ॥ १॥

श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् ।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥ २॥

वामहस्तं महाकृत्स्नं दशास्यशिरखण्डनम् ।
उद्यद्दक्षिणदोर्दण्डं हनूमन्तं विचिन्तयेत् ॥ ३॥

बालार्कायुततेजसं त्रिभुवनप्रक्षोभकं सुन्दरं
सुग्रीवाद्यखिलप्लवङ्गनिकरैराराधितं साञ्जलिम् ।
नादेनैव समस्तराक्षसगणान् सन्त्रासयन्तं प्रभुं
श्रीमद्रामपदाम्बुजस्मृतिरतं ध्यायामि वातात्मजम् ॥ ४॥

आमिषीकृतमार्ताण्डं गोष्पदीकृतसागरम् ।
तृणीकृतदशग्रीवमाञ्जनेयं नमाम्यहम् ॥ ५॥

चित्ते मे पूर्णबोधोऽस्तु वाचि मे भातु भारती ।
क्रियासुर्गुरवः सर्वे दयां मयि दयालवः ॥ ६॥